अथ शशकः प्रणम्य सविनयं प्रोवाच स्वामिन् नात्रापराधो



सिंहशशयोः

मम, न चापरेषां सत्त्वानाम् । श्रूयतां कारणम् । सिंह आह—सत्वरं निवेदय यावन्मम दंष्ट्रान्तर्गतो (१) न भवसि ।

शशक आह—स्वामिन् समस्तमृगैरद्य मम वारं विज्ञाय अहं प्रेषितः । मां तु लघुतरं दृष्ट्वा ते अपरान् पञ्च शशकान् मया सह प्रेषितवन्तः । ततश्चाहमागच्छन् पथि महता केनचिदपरसिंहेन विवरान्निर्गत्य अभिहितः रे क्व प्रस्थिता यूयम् । मयाभिहितं—वयं वनस्वामिनो भासुरकसिंहस्य आहारार्थं समयधर्म्मेण तत्सकाशे गच्छामः ।

ततस्तेनाभिहितं मदीयमेतद्वनम् । मया सह समयधर्म्मेण समस्तैर्मृगैर्वर्त्तितव्यम् । चौरः स भासुरकः । अथ (२) सोऽत्र वने राजा, तर्हि पञ्च शशकान् अत्र धृत्वा तमाहूय द्रुतमागच्छ । यः कश्चिदावयोः पराक्रमेण राजा भविष्यति, स सर्व्वानेव मृगान् भक्षयिष्यति । ततोऽहं तेनादिष्टः स्वामिसकाशमागतः । एतत् वेलातिक्रमकारणम् । तदत्र स्वामी प्रमाणम् (३) ।

(१) दंष्ट्रान्तर्गतः दन्तमध्यप्रविष्टः ।

(२) अथ यदि ।

(३) तत् तस्मात् अत्र अस्मिन् विषये स्वामी प्रभुः, प्रमाणं स्वाम्येव कर्त्तव्यमवधारयत्वित्यर्थः ।

तच्छ्रुत्वा भासुरक आह—भद्र यद्येवं सत्वरं दर्शय मे तं चौरसिंहम्। येनाहं मृगकोपं तस्योपरि क्षपयित्वा (१) स्वस्थो भवामि। शशक आह—आगच्छतु स्वामी। एवमुक्त्वा असावग्रे प्रस्थितः। ततश्च कञ्चित् कूपमासाद्य स भासुरकमाह—स्वामिन् कस्ते प्रतापं सढुं समर्थः। त्वां दृष्ट्वा दूरत एव स चौरः स्वदुर्गं प्रविष्टः। आगच्छ दर्शयामि।

तच्छ्रुत्वा भासुरक आह—भद्र सत्वरं दर्शय मे दुर्गम्। तदनु (२) दर्शितस्तेन कूपः। सोऽपि मूर्खः सिंहः कूपमध्ये आत्मनः प्रतिविम्बं दृष्ट्वा अपरसिंहधिया (३) नादं मुमोच। ततस्तत्प्रतिशब्देन द्विगुणतरो नादः कूपात् समुत्थितः। अथासौ तं नादमाकर्ण्य कोपज्वलित आत्मानं कूपे क्षिप्त्वा प्राणान् मुमोच। तदाप्रभृति सर्व्वे मृगा निर्भयास्तत्र वने वसन्ति स्म।

---

(१) क्षपयित्वा शमयित्वा।

(२) तदनु तत्पश्चात्।

(३) अपरसिंहधिया अन्यसिंहबोधेन, अन्यं सिंहमवधार्य्येत्यर्थः।

## वककुलीरकयोः ।



अस्ति कस्मिंश्चिद्वने महत् सरः । तत्रैको वकः स्थितः । स तु वृद्धभावमुपागतो मत्स्यान् व्यापादयितुमसमर्थः । अथ कदाचिदसौ क्षुत्क्षामः (१) तस्य सरसस्तीरे उपविष्टः अश्रुप्रवाहैर्धरातलम् अभिषिञ्चन् रुरोद ।

अथैकः कुलीरको (२) नानाजलचरसमेतः समुपेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे माम (३) किमद्य त्वया आहारवृत्तिर्नानुष्ठीयते, कथं वा रुद्यते । स प्राह—वत्स सत्यमुपलक्षितं भवता । अहं मत्स्यादः (४) । परं मया वैराग्यात् साम्प्रतं प्रायोपवेशनं (५) कृतम् । तेनाहं समीपगतानपि

---

(१) क्षुत्क्षामः क्षुधा क्षुधया क्षामः क्षीणः कातर इति यावत् ।

(२) कुलीरकः कर्कटः, काँकड़ा इति भाषा ।

(३) माम मातुल ।

(४) मत्स्यादः मत्स्यभक्षकः मत्स्यान् भक्षयित्वा प्राणयात्रां करोमि इत्यर्थः ।

(५) प्रायोपवेशनं प्राणांस्त्यक्ष्यामीति प्रतिज्ञाय आहारपरित्यागः प्रायः, तत्र उपवेशनम् प्राणत्यागार्थम् अनशनव्रतावलम्बनमित्यर्थः ।

मत्स्यान् न भक्षयामि। कुलीरकस्तत् श्रुत्वा प्राह माम किं ते



बककुलीरकयोः

वैराग्यकारणम्। स आह—वत्स अहमस्मिन् सरसि जातो वृद्धिं गतश्च। मया श्रुतं द्वादशवार्षिकी (१) अनावृष्टिः सम्पत्स्यते।

कुलीरकः प्राह—कस्मात् श्रुतं भवता। वक आह—दैवज्ञ-मुखात्। एतत् सरः स्वल्पतोयं संवृत्तं शीघ्रं शोषं यास्यति। यैः सह अहं वृद्धिं गतः सदैव क्रीड़ितश्च, अस्मिन् सरसि शुष्के ते सर्वे तोयाभावात् नाशं यास्यन्ति। अहं तेषां विनाशं द्रष्टुम-समर्थः। तेन दुःखेन एतत् प्रायोपवेशनं मया कृतम्। साम्प्रतं सर्वे जलचराः स्वजनैर्गुरुजलाशयेषु (२) नीयन्ते। मकर-जलहस्तिप्रभृतयस्तु स्वयमेव गच्छन्ति। अत्र पुनः सरसि ये जलचराः, ते निश्चिन्तास्तिष्ठन्ति।

अथ स तदाकर्ण्य अन्येषां जलचराणां निवेदयामास।

ततस्ते सर्वे भयव्याकुलमनसो मत्स्यकच्छपप्रभृतय आगत्य तं वकं पप्रच्छुः—माम अस्ति कश्चिदुपायो येन अस्माकं रक्षा भवति। वक आह—अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलं महत् सरः। यत् चतुर्विंशत्यापि वर्षैरवृष्टेऽपि पर्ज्जन्ये (३) न

---

(१) द्वादशवार्षिकी द्वादशवर्षव्यापिनी।

(२) गुरुजलाशयेषु महत्सु, ह्रदसरोवरप्रभृतिजलाशयेषु।

(३) पर्ज्जन्ये, मेघे।

शुष्यति। तत् यदि मम पृष्ठं कश्चिदारोहति, तमहं तत्र नयामि।

अथ ते जलचरा विश्वासमापन्नाः तात मातुल भ्रातरिति ब्रुवाणाः अहं पूर्व्वम् अहं पूर्व्वमिति वदन्तः समन्तात् परितस्थुः। सोऽपि दुष्टाशयः तान् क्रमेण पृष्ठमारोप्य जलाशयस्य नातिदूरे स्थितां विस्तीर्णां शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयितुम् आरेभे। एवं स जलचराणां मिथ्यावार्त्ताकथनैः मनांसि नित्यमेव रञ्जयन् आहारवृत्तिमकरोत्। अथ एकस्मिन् दिवसे स कुलीरकेणोक्तः—माम मया सह ते प्रथमः स्नेहसम्भाषः (१) सञ्जातः। किं मां परित्यज्य अन्यान् नयसि। तदद्य मम प्राणत्राणं कुरु। तदाकर्ण्य स दुष्टाशयश्चिन्तितवान्—त्यक्तोऽहं मत्स्यमांसानाम्। अद्य तावत् कुलीरकमिमं भक्षयामि। ततोऽसौ वाढ़मित्युक्त्वा (२) तं पृष्ठे निधाय तां बध्यशिलाम् (३) उद्दिश्य प्रस्थितः।

कुलीरकस्तु दूरादेव अस्थिपर्व्वतं शिलासमीपे समुद्वीक्ष्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत्, माम कथय कियद्दूरे स जलाशयः। त्वं मदीयभारेणातिश्रान्तः। स तु मन्दधीः (४)

(१) स्नेहसम्भाषः स्नेहसहित आलापः।

(२) वाढ़मित्युक्त्वा एवमस्तु इति कथयित्वा अङ्गीकृत्येति यावत्।

(३) बध्यशिलां बधसाधनं पाषाणं यस्यां शिलायां प्रक्षिप्य बधं साधयतीत्यर्थः।

(४) मन्दधीः मूढ़ः, निर्बुद्धिरिति यावत्।

वैराग्यकारणम्। स आह—वत्स अहमस्मिन् सरसि जातो वृद्धिं गतश्च। मया श्रुतं द्वादशवार्षिकी (१) अनावृष्टिः सम्पत्स्यते।

कुलीरकः प्राह—कस्मात् श्रुतं भवता। वक आह—दैवज्ञ-मुखात्। एतत् सरः स्वल्पतोयं संवृत्तं शीघ्रं शोषं यास्यति। यैः सह अहं वृद्धिं गतः सदैव क्रीड़ितश्च, अस्मिन् सरसि शुष्के ते सर्वे तोयाभावात् नाशं यास्यन्ति। अहं तेषां विनाशं द्रष्टुम-समर्थः। तेन दुःखेन एतत् प्रायोपवेशनं मया कृतम्। साम्प्रतं सर्वे जलचराः स्वजनैर्गुरुजलाशयेषु (२) नीयन्ते। मकर-जलहस्तिप्रभृतयस्तु स्वयमेव गच्छन्ति। अत्र पुनः सरसि ये जलचराः, ते निश्चिन्तास्तिष्ठन्ति।

अथ स तदाकर्ण्य अन्येषां जलचराणां निवेदयामास।

ततस्ते सर्वे भयव्याकुलमनसो मत्स्यकच्छपप्रभृतय आगत्य तं वकं पप्रच्छुः—माम अस्ति कश्चिदुपायो येन अस्माकं रक्षा भवति। वक आह—अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलं महत् सरः। यत् चतुर्विंशत्यापि वर्षैरवृष्टेऽपि पर्ज्जन्ये (३) न

(१) द्वादशवार्षिकी द्वादशवर्षव्यापिनी।

(२) गुरुजलाशयेषु महत्सु, ह्रदसरोवरप्रभृतिजलाशयेषु।

(३) पर्ज्जन्ये मेघे।

शुष्यति। तत् यदि मम पृष्ठं कश्चिदारोहति, तमहं तत्र नयामि।

अथ ते जलचरा विश्वाससमापन्नाः तात मातुल भ्रातरिति ब्रुवाणाः अहं पूर्व्वम् अहं पूर्व्वमिति वदन्तः समन्तात् परितस्थुः। सोऽपि दुष्टाशयः तान् क्रमेण पृष्ठमारोप्य जलाशयस्य नातिदूरे स्थितां विस्तीर्णां शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयितुम् आरेभे। एवं स जलचराणां मिथ्यावार्त्ताकथनैः मनांसि नित्यमेव रञ्जयन् आहारवृत्तिमकरोत्। अथ एकस्मिन् दिवसे स कुलीरकेणोक्तः—माम मया सह ते प्रथमः स्नेहसम्भाषः (१) सञ्जातः। किं मां परित्यज्य अन्यान् नयसि। तदद्य मम प्राणत्राणं कुरु। तदाकर्ण्य स दुष्टाशयश्चिन्तितवान्—तृप्तोऽहं मत्स्यमांसानाम्। अद्य तावत् कुलीरकमिमं भक्षयामि। ततोऽसौ वाढ़मित्युक्त्वा (२) तं पृष्ठे निधाय तां बध्यशिलाम् (३) उद्दिश्य प्रस्थितः।

कुलीरकस्तु दूरादेव अस्थिपर्व्वतं शिलासमीपे समुद्वीक्ष्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत्, माम कथय कियद्दूरे स जलाशयः। त्वं मदीयभारेणातिश्रान्तः। स तु मन्दधीः (४)

---

(१) स्नेहसम्भाषः स्नेहसहित आलापः।

(२) वाढ़मित्युक्त्वा एवमस्तु इति कथयित्वा अङ्गीकृत्येति यावत्।

(३) बध्यशिलां बधसाधनं पाषाणं यस्यां शिलायां प्रक्षिप्य बधं साधयतीत्यर्थः।

(४) मन्दधीः मूढ़ः, निर्बुद्धिरिति यावत्।

जलचरोऽयं न स्थले प्रभवति (१) इति मत्वा सस्मितमिद-माह,—कुलीरक कुतोऽन्यो जलाशयः, मम प्राणयात्रेयम् । तस्मात् स्मर्य्यतामभीष्टदेवता । त्वामपि अस्यां शिलायां प्रक्षिप्य भक्षयामि । इत्युक्तवति तस्मिन्, कुलीरको दशनसन्दंशेन (२) तस्य वकस्य मृणालधवलां मृदुग्रीवां चकर्त्त (३) । वकश्च पञ्चत्वं गतः ।

अथ कुलीरकस्तां वकग्रीवां समादाय शनैः शनैः तं जला-शयमाससाद । ततः स सर्वैरेव जलचरैः पृष्ठः, भोः कुलीरक किं प्रतिनिवृत्तस्त्वम् । किम् अमङ्गलकारणं । किञ्चित् सञ्जा तम् । स च तव मातुलको न समायातः । किं स चिरयति (४) । वयं सर्वेऽपि समुत्सुकाः कृतेक्षणाः (५) तिष्ठामः ।

एवं तैरभिहिते, कुलीरको विहस्य प्रोवाच,—मूर्खाः सर्वे जलचराः तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः । मया तु तस्य विश्वासघातकस्य अभिप्रायं ज्ञात्वा ग्रीवेयं तस्यानीता । तदलमुद्वेगेन । अधुना सर्वेषां जलचराणां क्षेमं भविष्यति ।

---

(१) प्रभवति प्रबलो भवति ।

(२) सन्दंश लौहनिर्म्मितो यन्त्रविशेषः, साँड़ासि इति भाषा ।

(३) चकर्त्त छिन्नवान् ।

(४) चिरयति विलम्बते ।

(५) कृतेक्षणाः कृतदर्शनाः प्रतीक्षमाणा इति यावत् ।

## सिंहशृगालादीनाम् ।

कस्मिंश्चिद्वने चण्डरवो नाम शृगालः प्रतिवसति स्म । स कदाचित् क्षुधाविष्टो नगरान्तरे प्रविष्टः । अथ नगरवासिनः सारमेयाः (१) अवलोक्य तं तीक्ष्णदंष्ट्राग्रैः भक्षयितुमारब्धवन्तः । स प्राणभयात् पलायमानः प्रत्यासन्नं रजकगृहं प्रविष्टः । तत्र नीलीरसपूर्णं महाभाण्डं सज्जीकृतमासीत् । स तस्मिन् पपात । अथ तस्मान्निष्क्रान्तोऽसौ नीलीवर्णः सञ्जातः । ततः सर्वे ते सारमेयाः तं शृगालमजानन्तो यथाभीष्टां दिशं जग्मुः । चण्डरवोऽपि तदन्तरम् (२) आसाद्य काननाभिमुखं प्रतस्थे ।

अथ तदपूर्व्वं सत्त्वमवलोक्य सर्व्वे सिंहव्याघ्रवृक- (३) प्रभृतयोऽरण्यनिवासिनो भयव्याकुलमानसाः समन्तात् पलायनक्रियां कुर्वन्ति स्म, कथयन्ति स्म च,—अहो अपूर्वमेतत् सत्त्वं कुतोऽप्यागतम् । न विज्ञायते कीदृगस्य चेष्टितं पौरुषञ्च, तद्दूरतरं गच्छामः ।

---

(१) सरमा कुक्कुरी तस्याः अपत्यं पुमान् सारमेयः कुक्कुरः ।

(२) अन्तरम् अवकाशम् ।

(३) वृकः क्षुद्रकायो व्याघ्रजातिविशेषः ।

चण्डरवस्तु तान् भयव्याकुलितान् विज्ञाय इदम् आह, भो भोः श्वापदाः (१) किं यूयं मां दृष्ट्वा सन्त्रस्ता व्रजथ। न भेतव्यं न भेतव्यम्। अहमद्य ब्रह्मणा स्वयमेव आहूयाभिहितः यत् श्वापदानां मध्ये कश्चित् राजा नास्ति। त्वं मयाद्य श्वापदराज्येऽभिषिक्तः। अतो गत्वा क्षितितले तान् सर्व्वान् परिपालयेति। ततोऽहम् अत्रागतः। अहं ककुद्रुमो नाम त्रैलोक्ये श्वापदराजः सञ्जातः।

तच्छ्रुत्वा ते श्वापदाः सिंहपुरःसराः (२) स्वामिन् प्रभो समादिशेति वदन्तस्तं परिवव्रुः (३)

ततस्तेन सिंहाय अमात्यपदवी प्रदत्ता, व्याघ्राय शय्यापालत्वम्, द्वीपिने ताम्बूलाधिकारः, करिणे प्रतीहारित्वम् (४), वानराय छत्त्रधरत्वम्। ये च आत्मीयजात्याः, तैः सह आलापमात्रमपि न करोति। शृगालाः सर्व्वे अर्द्धचन्द्रं दत्त्वा निःसारिताः।

एवं स राजक्रियायां वर्त्तते। ते च सिंहादयो मृगान् व्यापाद्य तस्य पुरतः प्रक्षिपन्ति। सोऽपि प्रभुधर्म्मेण (५) सर्वेषां (६) तान् विभज्य प्रयच्छति।

---

(१) श्वापदाः हिंस्रजन्तवः।

(२) सिंहपुरःसराः सिंहप्रभृतयः।

(३) परिवव्रुः वेष्टितवन्तः।

(४) प्रतीहारित्वं द्वारपालत्वम्।

(५) प्रभुधर्म्मेण राजधर्म्मेण राजधर्म्ममनुसृत्येति यावत्।

(६) सर्वेषां सर्वेभ्यः। सम्बन्धविवक्षया षष्ठी।

एवं गच्छति काले कदाचित् तेन समागतेन दूरदेशे शब्दाय-



सिंहशृगालादीनाम्

मानस्य शृगालवृन्दस्य (१) कोलाहलोऽश्रावि। तं शब्दं श्रुत्वा पुलकिततनुः आनन्दपरिपूर्णः उत्थाय स तारस्वरेण (२) विरोतुमारब्धवान्।

अथ ते सिंहादयः तं तस्य स्वरमाकर्ण्य शृगालोऽयमिति ज्ञात्वा सलज्जम् अधोमुखाः क्षणमेकं स्थिताः। ततो मिथः (३) प्रोचुः—भो वाहिता (४) वयम् अनेन क्षुद्रशृगालेन। तद्बध्यतां बध्यतामयमिति। सोऽपि तदाकर्ण्य पलायितुमिच्छन् सिंहादिभिः खण्डशः कृतः।

---

(१) शृगालवृन्दस्य शृगालसमूहस्य।

(२) तारस्वरेण उच्चस्वरेण।

(३) मिथः रहसि शृगालस्य परोक्षमित्यर्थः।

(४) वाहिताः स्वल्पभावेन कर्म्मकारिताः।

## सिंहदासेरकयोः ।

---

कस्मिंश्चिद्वने मदोत्कटो नाम सिंहः प्रतिवसति स्म । तस्य च अनुचरा द्वीपिवायसगोमायवः (१) सन्ति । अथ कदाचित् तैरितस्ततो भ्रमद्भिः सार्थभ्रष्टः (२) क्रथनको नाम उष्ट्रो दृष्टः । सिंह आह—अहो अपूर्वमिदं सत्त्वम् । ज्ञायतां किम् एतदारण्यम् उत ग्राम्यमिति । तच्छ्रुत्वा वायस आह—भोः स्वामिन् ग्राम्योऽयम् उष्ट्रनामा जीवविशेषस्तव भोज्यः, तत् व्यापाद्यतामयम् । सिंह आह—नाहं गृहागतं हन्मि । तदभयप्रदानं दत्त्वा मत्सकाशमानीयताम् येन अस्यागमनकारणं पृच्छामि ।

अथासौ सर्वैरभयप्रदानं दत्त्वा मदोत्कटस्य सकाशमानीतः । प्रणम्योपविष्टश्च स आत्मवृत्तान्तं सर्व्वं निवेदितवान् । सिंहेनोक्तं—भोः क्रथनक मा त्वं ग्रामं गत्वा भूयोऽपि भारोद्वहनकष्टभागी भूयाः । अत्रैव अरण्ये निःशङ्कः शष्पाणि (३) भक्षयन् मया सह वस । सोऽपि तथेत्युक्त्वा तेषां मध्ये विचरन् अकुतोभयः सुखेनास्ते ।

---

(१) द्वीपी व्याघ्रः वायसः काकः, गोमायुः शृगालः ।

(२) सार्थभ्रष्टः यूथात् विश्लिष्टः ।

(३) शष्पाणि नवतृणानि ।

अथैकदा मदोत्कटस्य अरण्यचारिणा महागजेन सह युद्ध-मभूत्। तत्र तस्य गजदन्तप्रहारैर्महती व्यथा सञ्जाता। स तु कथमपि न प्राणैर्वियुक्तः, परं शरीरासामर्थ्यात् न पदमपि चलितुं शक्नोति। ते च सर्वे काकादयः क्षुधाविष्टाः परं दुःखं भेजुः। अथ तान् सिंहः प्राह—भो रन्विष्यतां कुत्रचित् किञ्चित् सत्त्वम्। येनाहम् एतामपि दशां प्राप्तः तत् हत्वा युष्माकं भोजनं सम्पादयामि।

ततस्ते चत्वारोऽपि भ्रमितुमारब्धवन्तः, परं न किञ्चित् सत्त्वं ददृशुः। अथ वायसशृगालौ परस्परं मन्त्रयतः स्म। शृगाल आह—भो वायस किं प्रभूतभ्रान्तेन (१)। योऽस्माकं प्रभो-र्विश्वस्तः क्रथनकस्तिष्ठति, तं हत्वा सर्वपरिवारस्य प्राणयात्रां कुर्मः। वायस आह—भो युक्तमुक्तं भवता। परं स्वामिना तस्याभयं दत्तम्, तेन अवध्योऽयमिति। शृगाल आह—भो वायस अहं स्वामिनं शिक्षाप्य तथा करिष्ये यथा स्वामी तस्य वधं करिष्यति। तिष्ठन्तु भवन्तोऽत्रैव यावदहं गृहं गत्वा प्रभोराज्ञां गृहीत्वा आगच्छामि एवमभिधाय शृगालः सत्वरं सिंहमुद्दिश्य प्रस्थितः।

अथासौ सिंहमासाद्य इदमाह—स्वामिन् समस्तं वनं

(१) प्रभूतभ्रान्तेन बहुभ्रमणेन ।

भ्रान्त्वा समागता वयम्। परं न किञ्चित् सत्त्वं समासादितम्। तत् किं कुर्म्मो वयम् साम्प्रतं बुभुक्षया पदमेकम् चलितुं न शक्ताः। देवोऽपि पथ्याशी ( १ ) वर्त्तते। तद्यदि देवस्यादेशो भवति तदा क्रथनकपिशितेनाद्य ( २ ) पथ्यक्रिया क्रियते।

सिंहस्तु तस्य तद्दारुणं वचनमाकर्ण्य सकोपमिदमाह—धिक धिक् पापाधम! यद्येवं भूयो वदसि, त्वां तत्क्षणमेव हनिष्यामि। मया तस्याभयं प्रदत्तम्। तत् कथं स्वयमेव तं व्यापादयामि। तच्छ्रुत्वा शृगाल आह—स्वामिन् यदि अभयप्रदानं दत्त्वा बधः क्रियते तदा ते दोषो भवति। यदि पुनः स देवपादानां भक्त्या आत्मनो जीवितं प्रयच्छति तदा तत्र न दोषः। यद्यदि स्वयमेवात्मानं बधाय नियोजयति ( ३ ) तदासौ बध्यः। अन्यथा अस्माकं मध्यादेकतमो बध्यः। देवपादाः पथ्याशिनः क्षुधानिरोधादन्त्यां दशां ( ४ ) यास्यन्ति। तत् किमेतैः प्राणैर-

---

( १ ) पथ्याशी पथ्यभोजी बुभुक्षया नितान्तमभिभूत इति यावत्।

( २ ) पिशितेन मांसेन।

( ३ ) नियोजयति नियुक्तं करोति समर्पयतीत्यर्थः।

( ४ ) अन्त्यां दशां मृत्युम्।

स्माकं यदि ते स्वाम्यर्थे न यान्ति। यदि स्वामिपादानां किञ्चिदनिष्टं भविष्यति तदास्माभिरपि वह्निप्रवेशः कार्य्यः ।

एतदाकर्ण्य मदोत्कट आह—यद्येवं कुरुष्व यद्रोचते। तच्छ्रुत्वा शृगालः सत्वरं गत्वा सर्व्वांस्तानुवाच—भो भोः स्वामिनो महत्यवस्था (१) वर्त्तते। नासिकान्तप्राप्तजीवितस्तिष्ठति (२)। तत् किं पर्य्यटितेन। तेन विना कोऽस्मानत्र वने रक्षिष्यति। तद्गत्वा क्षुधारोगात् परलोकं प्रस्थितस्य (३) तस्यात्मशरीरदानं कुर्म्मः। येनस्वामिप्रसादस्यानृणतां गच्छामः। तदनन्तरं ते सर्व्वे गत्वा वाष्पपूरितदृशो मदोत्कटं प्रणम्योपविष्टाः। तान् दृष्ट्वा मदोत्कटः प्राह—भोः प्राप्तं दृष्टं वा किञ्चित् सत्त्वम्।

अथ तेषां मध्यात् काकः प्रोवाच—स्वामिन् वयं तावत् सर्व्वत्रैव पर्य्यटिताः। परं न किञ्चित् प्राप्तं दृष्टं वा सत्त्वम्। तदद्य मां भक्षयित्वा प्राणान् धारयतु स्वामी, येन देवस्य श्वसनं (४) भवति, मम च स्वर्गप्राप्तिरिति।

---

(१) महती परमा दशेति यावत्।

(२) नासिकान्तप्राप्तजीवितः नासिकायाः अन्ते अग्रे प्राप्तम् उपस्थितं जीवितस्य सस्वामिनो मृत्युरुपस्थित इत्यर्थः।

(३) प्रस्थितस्य प्रतिष्ठमानस्य।

(४) श्वसनं जीवनं प्राणरक्षेति यावत्।

तच्छ्रुत्वा शृगाल आह—भोः स्वल्पकायो भवान्। तव भक्षणात् स्वामिनः प्राणयात्रा तावन्न भवति। दोषश्च महान् (१) समुत्पद्यते। तद्दर्शिता भवता स्वामिभक्तिः लब्धश्चानृण्यं भर्त्तृपिण्डस्य (२), प्राप्तश्च उभयोर्लोकयोः साधुवादः। तदपसराग्रतः येनाहमपि स्वामिनं विज्ञापयामि। तथानुष्ठिते सादरं शृगालः प्रणम्य प्रोवाच—स्वामिन्नद्य मदीयेन कायेन प्राणधारणं कृत्वा मम उभयलोकप्राप्तिं कुरु।

तच्छ्रुत्वा द्वीपी प्राह—भोः साधूक्तं भवता।। परं भवानपि स्वल्पकायः। अपरञ्च नखायुधत्वादभक्ष्यो (३) भवान्। दर्शितं त्वयात्मनः कौलीन्यम् (४)। तदपसरतु भवानग्रतः येनाहमपि स्वप्रभुं प्रसादयामि। तथानुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह—स्वामिन् क्रियतामद्य मम प्राणैः प्राणयात्रा। दीयतां

---

(१) निषिद्धकाकमांसभक्षणजनित इति शेषः।

(२) भर्तृपिण्डस्य प्रभोरन्नस्य।

(३) नखायुधत्वादभक्ष्यः नखम् आयुधम् अस्ति येषां ते नखायुधाः शृगालकुक्कुरादयः श्वापदास्ते च शास्त्रेऽभक्ष्यतया निर्द्दिष्टाः।

(४) कौलीन्यं सत्कुलजातत्वम्।

मे स्वर्गेऽक्षयो वासः। विस्तीर्य्यतां पृथ्वीतले प्रभूतं यशः। नात्र विकल्पः (१) कार्य्यः।

सर्वमेतदाकर्ण्य क्रथनकश्चिन्तयामास--एतैस्तावत् शोभनानि वाक्यानि प्रोक्तानि। न चैकोऽपि स्वामिना विनाशितः। तदहमपि प्राप्तकालं (२) विज्ञापयामि। इति विचिन्त्य स प्रोवाच—भो युक्तमुक्तं भवता, परं भवानपि नखायुधः। तत् कथं भवन्तमपि स्वामी भक्षयतु। तदपसरतु भवान् येनाहं स्वामिनं विज्ञापयामि। तथानुष्ठिते क्रथनकोऽग्रे स्थित्वा प्रणम्योवाच—स्वामिन् एते तावदभक्ष्या भवताम्। तन्मम प्राणैः प्राणयात्रा विधीयताम्। येन ममोभयलोकप्राप्तिर्भवतु।

एवमभिहिते सिंहानुज्ञाताभ्यां शार्दूलसृगालाभ्यां विदारितकुक्षिः काकेनोत्पाटितचक्षुः क्रथनकः प्राणानत्याक्षीत्।

---

(१) विकल्पः संशयः।

(२) प्राप्तकालं प्राप्तः कालोऽस्य तत्। विज्ञापयामीति क्रियाया विशेषणम्।

# त्रयाणां मत्स्यानाम् ।

कस्मिंश्चिज्जलाशये अनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्य-श्चेति ( १ ) त्रयो मत्स्याः प्रतिवसन्ति स्म। अथ कदाचित् तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिरभिहितम् - अहो बहु-मत्स्योऽयं ह्रदः कदाचिदपि नास्माभिरन्वेषितः। अद्य तावदा-हारवृत्तिः सञ्जाता, सन्ध्यासमयश्च संवृत्तः ( २ ) तत् प्रभाते अत्रागन्तव्यमिति निश्चयः।

अथ तेषां तत् कुलिशपातोपमं ( ३ ) वचः समाकर्ण्य अनागतविधाता सर्व्वान् मत्स्यानाहूय इदमूचे - हंहो ( ४ ) श्रुतं भवद्भिः यन्मत्स्यजीविभिरभिहितम्। तद्रात्रावेव गम्यता-

---

( १ ) अनागतविधाता अनागतस्य अनुपस्थितस्य सम्भावितस्येति यावत् विधाता प्रतीकारकः, यः अनिष्टं सम्भाव्य पूर्व्वमेव तत्प्रतीकारं चिन्तयति। प्रत्युत्पन्नमतिः प्रत्युत्पन्ना कार्य्यकाले उपस्थिता मतिः कर्त्तव्यावधारणशक्तिर्यस्य विपदि अव्याकुलेन मनसा प्रतीकारचिन्तनसमर्थः। यद्भविष्यः यत् भविष्यं तत् भवत्येव न तस्य प्रतिविधानं कर्त्तुं शक्यते इति निश्चित्य उपायचिन्तनविमुखः।

( २ ) संवृत्तः उपस्थित इति यावत्।

( ३ ) कुलिशपातोपमं वज्रपातसदृशम्।

( ४ ) हंहो भोः।

मन्यत् सरः । नूनं प्रभातसमये ते मत्स्यजीविनोऽत्र समागत्य



त्रयाणां मत्स्यानाम् ।

मत्स्यसंक्षयं करिष्यन्ति, एतन्मम मनसि वर्त्तते। तन्न युक्तं साम्प्रतं क्षणमपि अत्रावस्थातुम्। एतदाकर्ण्य प्रत्युत्पन्नमतिः प्राह - भोः सत्यमभिहितं भवता। ममाप्यभीष्टमेतत्। तदन्यत्र गम्यतामिति।

अथ तत् समाकर्ण्य उच्चैर्विहस्य यद्भविष्यः प्राह—हंहो न सम्यक् मन्त्रितं भवद्भ्याम्। किं तेषां वाङ्मात्रेण पितृपैतामहिकमेतत् सरस्त्यक्तुं युज्यते। यद्यायुःक्षयोऽस्ति, तदाऽन्यत्र गतानामपि मृत्युर्भविष्यति। तदहं न यास्यामि, भवद्भ्यान्तु यद्रोचते तत् क्रियताम्।

एवं तस्य तं निश्चयं (१) ज्ञात्वा अनागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह परिजनेन। अथ प्रभाते तैर्मत्स्यजीविभिः जालैस्तं जलाशयमालोड्य यद्भविष्येण सह तत् सरो निर्मत्स्यतां नीतम्।

---

(१) निश्चयं सिद्धान्तम्।

## धर्म्मबुद्धिपापबुद्ध्योः।



कस्मिंश्चिदधिष्ठाने (१) धर्म्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म। कदाचित् पापबुद्धिना चिन्तितम्—अहं ताव-न्मूर्खो दरिद्रश्च। तदेतं धर्म्मबुद्धिमादाय देशान्तरं गत्वा अस्या-श्रयेण अर्थोपार्ज्जनं कृत्वा एनमपि वञ्चयित्वा सुखी भवामि। अन्यस्मिन्नहनि स धर्म्मबुद्धिं प्राह—भो मित्र देशान्तरमदृष्ट्वा वार्द्धके शिशुजनस्य कां वार्त्तां कथयिष्यसि।

तदाकर्ण्य धर्म्मबुद्धिः प्रहृष्टमना गुरुजनानुज्ञातः शुभेऽहनि तेन सह देशान्तरं प्रस्थितः। तत्र धर्म्मबुद्धिप्रभावेण पापबुद्धि-नापि प्रभूतं वित्तमासादितम्। ततश्च द्वावपि तौ प्रभूतं द्रव्य-मर्ज्जयित्वा प्रहृष्टौ स्वगृहं प्रति औत्सुक्येन निवृत्तौ।

अथ स्वस्थानसमीपवर्त्तिना पापबुद्धिना धर्म्मबुद्धिरभिहितः—भद्र न सर्व्वमेतद्वित्तं गृहं नेतुं युज्यते ज्ञातयो बान्धवाश्च प्रार्थयिष्यन्ते। तदस्मिन् गहने वने क्वापि भूमौ निधाय किञ्चि-न्मात्रमादाय गृहं प्रविशावः। भूयः प्रयोजने सञ्जाते समेत्या-

(१) अधिष्ठाने नगरे।

स्मात् स्थानान्नेष्याव:। तदाकर्ण्य धर्म्मबुद्धिराह—भद्र तर्हि एवं क्रियताम्। तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन स्थितवन्तौ।

एकदा पापबुद्धिर्निशीथेऽटवीं गत्वा तत् सर्वं वित्तं समादाय गर्त्तं पूरयित्वा स्वभवनं जगाम। अथान्येद्यु: पापबुद्धिर्धर्म्मबुद्धिं समेत्य प्रोवाच—सखे बहुकुटुम्बावावां (१) वित्ताभावात् सीदाव: (२)। तद्गत्वा तत्र स्थाने किञ्चिन्मात्रं धनमानयाव:। सोऽब्रवीत्—भद्र एवं क्रियताम्।

अथ तौ तत् स्थानं यावत् खनत: तावद्रिक्तं भाण्डं दृष्टवन्तौ। अत्रान्तरे (३) पापबुद्धिरात्मशिरस्ताड़यन् प्रोवाच भो धर्म्म-बुद्धे त्वया हृतमेतद्धनं नान्येन, यतो भूयोऽपि गर्त्तापूरणं कृतम्। तत् प्रयच्छ मे तस्यार्द्धम्। अन्यथा अहं राजकुले निवेदयिष्यामि। स आह—भो दुरात्मन् मैवं वद। धर्म्मबुद्धि: खल्वहं

(१) बहुकुटुम्बौ बहुपोष्यवर्गौ।

(२) सीदाव: अवसादं प्राप्नुव: क्लेशं सहावहे इति यावत्।

(३) अत्रान्तरे अस्मिन् समये।

नैतच्चौरकर्म्म करोमि। एवं द्वावपि तौ विवदमानौ धर्म्माधिकरणं (१) गत्वा प्रोचतुः परस्परं दूषयन्तौ।

अथ तौ धर्म्माधिकरणाधिष्ठितैः (२) पुरुषैर्दिव्यार्थे यावन्नियोजितौ तावत् पापबुद्धिराह—हंहो न सम्यक् दृष्टोऽयं न्यायः (३)। अत्र विषये वनदेवता मम साक्षीभूता तिष्ठति। सैव आवयोरेकतरं चौरं वा साधुं वा करिष्यति। अथ तैः सर्व्वैरभिहितं—भो युक्तमुक्तं भवता। अस्माकमपि अत्र विषये महत् कुतूहलं वर्त्तते। प्रत्यूषसमये युवाभ्यामस्माभिः सह तत्र वनोद्देशे गन्तव्यम्।

एतस्मिन्नन्तरे पापबुद्धिर्गृहे गत्वा स्वजनकमुवाच—तात प्रभूतोऽयं मयार्थो धर्म्मबुद्धेश्चोरितः। स च तव वचनेन परिणतिं (४) गच्छति, अन्यथा अस्माकं प्राणैः सह यास्यति। स आह—वत्स तद्वद द्रुतं यत् कथयित्वा स्थिरतां नयामि। पापबुद्धिः आह—तात अस्ति तस्मिन् प्रदेशे महाशमी। तस्यां

(१) धर्म्माधिकरणं व्यवहारदर्शनस्थानं विचारालयमिति यावत्।

(२) धर्म्माधिकरणाधिष्ठितैः धर्म्माधिकरणनियुक्तैः।

(३) न्यायः विचारः।

(४) परिणतिं परिपाकम्।

महत् कोटरमस्ति। तत्र त्वं साम्प्रतमेव प्रविश। ततः प्रभाते यदाहं सत्यश्रावणं (१) करोमि तदा त्वया वाच्यं धर्म्मबुद्धिश्चौर इति।

तथानुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिर्धौतप्रावरणो (२) धर्म्मबुद्धिपुरःसरो धर्म्माधिकरणिकैः (३) सह तां शमीमभ्येत्य तारस्वरेण (४) प्रोवाच—भगवति वनदेवते आवयोर्मध्ये यश्चौरस्तं कथय (५)। अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच—भोः शृणुत शृणुत धर्म्मबुद्धिना अपहृतमेतद्धनम्। एतदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना अभूवन्। धर्म्मबुद्धिना तु तच्छमीकोटरं वह्निभोज्यद्रव्यैः (६) परिवेष्ट्य वह्निना सन्दीपितम्।

---

(१) सत्यश्रावणं करोमि सत्यं श्रावयामि, सत्यं वदसि चेत् स्वर्गमाप्स्यसि अनृतं वदसि चेत् नरकमवाप्स्यसीति एवंप्रकारेण समवेतान् साक्षिणः साक्ष्यकथनात् [illegible] राजपुरुषादयो यत् श्रावयन्ति तत् सत्यश्रावणम्।

(२) प्रावरणम् उत्तरीयवस्त्रम्।

(३) धर्म्माधिकरणिकैः धर्म्माधिकरणनियुक्तैः।

(४) तारस्वरेण उच्चस्वरेण।

(५) तं कथय तं प्रकाशय।

(६) वह्निभोज्यद्रव्यैः अग्न्युद्दीपकैर्वस्तुभिः।

अथ ज्वलति तस्मिन् अर्द्धदग्धशरीरः स्फुटिताक्षः (१) करुणं परिदेवयन् (२) पापबुद्धिपिता शमीकोटरान्निश्चक्राम। ततस्तैः सर्व्वैः पृष्टं—भोः किमिदम्। इत्युक्ते स पापबुद्धिविचेष्टितं सर्व्वमिदं तेषां निवेद्य उपरतः (३)। अथ पापबुद्धिं शमीशाखायां प्रविलम्ब्य (४) राजपुरुषा धर्म्मबुद्धिं प्रशस्येदमूचुः—अहो साध्विदमुच्यते।

उपायं चिन्तयेत् प्राज्ञस्तथापायञ्च चिन्तयेत्।

अनेन पापबुद्धिना उपायश्चिन्तितो नापायः ततस्तत्फलं प्राप्तम्।

---

(१) स्फुटिताक्षः स्फुटितनयनः।

(२) परिदेवयन् विलपन्। परिदेवयमान इति साधु।

(३) उपरतः मृतः।

(४) प्रविलम्ब्य रज्ज्वा बद्धा लम्बयित्वा।

## शश-गजानाम् ।

कस्मिंश्चिद्वने चतुर्दन्तो नाम महागजो यूथाधिपः (१) प्रतिवसति स्म। तत्र कदाचिन्महती अनावृष्टिः सञ्जाता। तेन तड़ागह्रदपल्वलसरांसि (२) सर्व्वाण्यपि शोषमुपगतानि। अथ सर्वैर्गजैः स गजराजः प्रोक्तः—देव पिपासाकुलाः केचित्, मृताश्चापरे। तदन्विष्यतां कश्चिज्जलाशयः यत्र जलपानेन सर्व्वे स्वस्थतां व्रजन्ति। ततस्तेनाष्टासु दिक्षु उदयकान्वेषणाय वेग-चण्डा (३) अनुचरप्रेषिताः।

अथ ये पूर्व्वदिग्भागे गताः तैर्हंसकारण्डवादिजलपक्षिभिरलङ्कृतः फलभरनतैर्वनपादपैरुपशोभितश्चन्द्रसरोनामको ह्रदो दृष्टः। दृष्ट्वा हृष्टैस्तैः प्रतिनिवृत्य स्वामिने प्रणम्योक्तम्—अस्ति विविक्ते प्रदेशे महान् ह्रदः तत्र गम्यतामिति।

तथाभिहिते पञ्चरात्रमुपसर्पद्भिस्तैः ह्रदः समासादितः। ते

---

(१) यूथाधिपः यूथं समूहः तस्य अधिपः पतिः।

(२) गभीरो जलाशयः तड़ागः। अतलस्पर्शी महान् जलाशयः ह्रदः। अल्पजलो जलाशयः पल्वलम्। सामान्यो जलाशयः सरः।

(३) वेगचण्डाः वेगेन चण्डाः अत्युग्राः, अतिवेगेन धावनशीला इति यावत्।

च स्वेच्छया तज्जलमवगाह्य अस्तमनवेलायां ( १ ) निष्क्रान्ताः । तस्य ह्रदस्य समन्तात् शशकविलान्यसंख्यानि सन्ति । तानि च सर्व्वाणि तैर्गजैरितश्चेतश्च भ्राम्यद्भिर्भग्नानि । तत्र च शशकाः केचिन्मृताः, केचिच्च जीवशेषा जाताः, केचिद्भग्नपादाः, अन्ये जर्ज्जरितकलेवराः, अपरे रुधिराप्लुताः ।

अथ गते तस्मिन् गजयूथे सर्वे ते शशकाः सोद्वेगं समेत्य मिथो मन्त्रं चक्रुः—अहो विनष्टा वयम् । नित्यमेवैतत् गजयूथमागमिष्यति यतो नान्यत्र जलमस्ति । तत् सर्वेषां नाशो भविष्यति । तच्चिन्त्यतां कश्चिन्निवारणोपायः ।

तत्रैके प्रोचुः—गम्यतां देशत्यागेन । अथान्यैरुक्तं—भोः पितृपैतामहं स्थानमेतन्न शक्यते सहसा त्यक्तुम् । तत् क्रियतां तेषां ( १ ) काचिद्विभीषिका ( २ ) येन ते कथमपि न समागच्छन्ति । अथान्ये प्रोचुः—यद्येवं तदस्ति तेषां महद्विभीषिकास्थानं येन ते नागमिष्यन्ति । सा च विभीषिकेयम्—अस्मत्स्वामी विजयदत्तो नाम शशकश्चन्द्रमण्डले निवसति । प्रेष्यतां कश्चित् दूतो यूथाधिपसकाशम् । वक्तव्यश्च तेन—भो यूथाधिप भगवांश्चन्द्रस्वामत्र ह्रदे आगच्छन्तं निषेधति यतस्तत्परि-

---

( १ ) अस्तमनवेलायां सूर्य्यस्यास्तगमनसमये ।

( १ ) तेषां गजानाम् ।

( २ ) विभीषिकां भयप्रदर्शनम् ।

गृहीता (१) वयमस्य ह्रदस्य समन्तात् प्रतिवसामः। एवमभिहिते कदाचिद्विरमति।



शश-गजानाम्।

(१) तत्परिगृहीताः तेन भगवता चन्द्रेण परिगृहीताः स्वीकृताः तदाश्रिता इति यावत्।

अथान्ये प्रोचुः—यद्येवं तदस्ति लम्बकर्णो नाम शशकः। स च वचनरचनाचतुरो दूतकर्म्मज्ञः। स तत्र ह्रदे प्रेष्यताम्। तदन्विष्यतां यद्यस्मद्वचनात् स यास्यति। अपरे प्रोचुः—अहो युक्तमुक्तं, नान्योऽस्ति कश्चिदुपायोऽस्माकं जीवितस्य। तत् लम्बकर्णोऽन्विष्य निरूप्यतामिति (१)।

अथ तथानुष्ठिते लम्बकर्णो यूथापरिवृतं गजेन्द्रमायान्तं दृष्ट्वा चिन्तयामास—अशक्योऽनेन सहास्मद्विधानां समागमः। तत् सर्वथा अप्रधृष्यायां (२) भूमौ स्थित्वा सन्दर्शनमस्य प्रयच्छामि। इति विचिन्त्य उच्चैस्तरमगम्यं स्थलमारुह्य तं यूथाधिपमुवाच—भो भो दुष्टगज किमिवमवलीलया निःशङ्कतया परह्रदे आगच्छसि। निवर्त्तस्व।

तदाकर्ण्य विस्मितो गज आह—भोः कस्त्वम्। स आह—अहं विजयदत्तो नाम शशकश्चन्द्रमण्डलनिवासी। साम्प्रतं भगवता चन्द्रमसा तव पार्श्वे दूतोऽहं प्रहितः। जानात्येव भवान् यथार्थवादिनो दूतस्य न दोषः करणीयः। दूतमुखा हि राजानः (३)। तच्छ्रुत्वा गज आह—भोः शशक कथय भगवतश्चन्द्रस्य सन्देशं येन सत्वरं क्रियते।

---

(१) निरूप्यतां दूतत्वेन स्थिरीक्रियतां दूतकर्म्मणि नियुज्यतामित्यर्थः।

(२) अप्रधृष्यायाम् आक्रमितुमशक्यायाम्।

(३) दूता एव मुखं येषां ते दूतमुखाः। राजानः स्वमुखेन न किमपि कथयन्ति, दूता एव तेषां वक्तव्यं विपक्षादिसमीपे कथयन्ति।

सोऽब्रवीत् भगवता चन्द्रेणैवमुक्तं—भवता अतीतदिवसे यूथेन सहागच्छता प्रभूताः शशका निपातिताः। वेत्ति भवान् मत्परिगृहीता एते तेन लोके प्रख्यातनामास्मि शशाङ्क इति। यद्यदि जीवितेन प्रयोजनं तदा त्वयात्र ह्रदे भूयो नागन्तव्यम्। किं बहुना प्रलपितेन। यदि त्वमस्माद्व्यापारात् न निवर्त्तसे तदास्मत्सकाशात् महान्तमनर्थं प्राप्स्यसीति। एष तस्य सन्देशः।

तच्छ्रुत्वा हस्तिराजोऽतीवक्षुभितहृदयश्चिरं (१) विचिन्त्याब्रवीत्—भद्र सत्यं मयापकृतं भगवतश्चन्द्रस्य। सोऽहमधुना तेन सह विरोधं न करिष्यामि। तदाशु दर्शय पन्थानं येनाहं गत्वा भगवन्तं प्रसादयामि। शशकोऽब्रवीत्—आगच्छतु भवानेकाकी येनाहं तं दर्शयामि। गजः प्राह—अथ क्व वर्त्तते भगवान् शशाङ्कः साम्प्रतम्। स आह—ननु अत्र ह्रदे साम्प्रतं शशकानां युष्मत्प्रमथितानां हतशेषाणां समाश्वासनाय समायातस्तिष्ठति। अहं तवान्तिके प्रेषितः। गज आह—भो यद्येवं दर्शय मे स्वामिनं येन प्रणम्य प्रसाद्य च अन्यत्र गच्छामि।

शशक आह—भोः समागच्छ मया सह त्वमेकाकी येन तेन

(१) क्षुभितहृदयः आकुलचित्तः।

सह दर्शनं करोषि। तथानुष्ठिते शशको निशागमे तं नीत्वा ह्रदतटे निधाय जलमध्ये चन्द्रबिम्बमदर्शयत्। आह च—एष नः स्वामी जलमध्ये समाधिस्थस्तिष्ठति (१)। तत् निभृतं (२) प्रणम्य सत्वरं व्रज। नो चेत् सताधिभङ्गात् भूयोऽपि प्रभूतं तवोपरि कोपं करिष्यति। ततो गजोऽपि हुङ्कारपूर्व्वं जले शुण्डादण्डं प्रसारितवान्।

अथ स क्षुभितोदकवशादितश्चेतश्च भ्रमति चन्द्रमण्डले चन्द्रसहस्रमपश्यत्। ततः शशकः प्रतिनिवृत्य हस्तिराजमब्रवीत्—कष्टं भवता द्विगुणं रोषितश्चन्द्रः। स आह—केन हेतुना भगवांश्चन्द्रो मयि प्रकुपितः। सोऽब्रवीत्—स्पर्शनादस्य पानीयस्य।

तच्छ्रुत्वा गजगति-रवनितल-नतशिराः प्रणम्य भगवन्तं चन्द्रमसं क्षमयामास। अथ शशकं प्रत्याह—भद्र अशेषकार्य्येष्वपि भगवांश्चन्द्रो ममोपरि प्रसादयितव्यः। न चाहं पुनरिहागमिष्यामि। इत्युक्त्वा भयत्रस्तमनाः (१) प्रस्थितः। शशकाश्च तद्दिनादारभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म।

---

(१) समाधिस्थः ध्याननिविष्टः।

(२) निभृतं निःशब्दम् अन्यथा समाधिभङ्गः स्यादिति भावः।

(३) भयत्रस्तमनाः भयाकुलचित्तः।

# त्रयाणां धूर्त्तानाम्

कस्मिंश्चिदधिष्ठाने मित्रशर्म्मा नाम ब्राह्मणः प्रतिवसति स्म। स कदाचिन्माघमासे पशुप्रार्थनाय ग्रामान्तरं गतः। तत्र तेन कश्चिद्यजमानो याचितः—भो यजमान आगामिन्याममावस्यायां यक्ष्यामि यज्ञं (१) तद्देहि मे पशुमेकम्। अथ तेन तस्य शास्त्रोक्तः पीवरतनुः (२) पशुः प्रदत्तः। सोऽपि तं समर्थम् इतस्ततश्च गच्छन्तमवलोक्य स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे।

अथ तस्य गच्छतो मार्गे त्रयो धर्त्ताः सम्मुखा बभूवुः। तैश्च तादृशं पीवरतनुं पशुं स्कन्धमारूढ़मवलोक्य मिथोऽभिहितम्—अहो अस्य पशोर्भक्षणादद्यतनो हिमपातो व्यर्थतां नीयते। तदेनं वञ्चयित्वा पशुमादाय शीतत्राणं (३) कुर्म्मः।

अथ तेषामेकतमो वेशपरिवर्त्तनं विधाय सम्मुखो भूत्वा तमूचे—भो भोः किमेवं जनविरुद्धं हास्यकार्य्यमनुष्ठीयते यदेष सारमेयोऽपवित्रः (४) स्कन्धारूढ़ो नीयते। ततश्च तेन

---

(१) यज्ञं यक्ष्यामि यज्ञं करिष्यामि।

(२) पीवरतनुः स्थूलकलेवरः।

(३) शीतत्राणं शीतात् आत्मरक्षणम्।

(४) सरमा कुक्कुरी तस्या अपत्यं पुमान् सारमेयः कुक्कुरः।

कोपाभिभूतेनाभिहितम्—अहो किमन्धो भवान् यत् पशुं सारमेयं प्रतिपादयति (१)। सोऽब्रवीत्—ब्रह्मन् कोपस्त्वया न कार्य्यः यथेच्छं गम्यतामिति।

अथ यावत् किञ्चिदध्वान्तरं गच्छति तावत् द्वितीयो धूर्त्तः सम्मुखः समुपेत्य तमुवाच—भो ब्रह्मन् कष्टं कष्टम्। यद्यपि वल्लभोऽयं ते सारमेयः तथापि स्कन्धमारोपयितुं न युज्यते। अथासौ सकोपमिदमाह—भोः किमन्धो भवान् यत् पशुं सारमेयं वदति। सोऽब्रवीत्—भगवन् मा कोपं कुरु। अज्ञानान्मया अभिहितम्। त्वमात्मरुचितं समाचरेति।

अथ यावत् स्तोकं वर्त्मान्तरं गच्छति तावत् तृतीयोऽन्यवेशधारी धूर्त्तः सम्मुखः समुपेत्य तमुवाच—भो अयुक्तमेतत् यत् त्वं सारमेयं स्कन्धाधिरूढ़ं नयसि। तत् त्यज्यतामेष यावदन्यः कश्चिन्न पश्यति। अथासौ बहु विमृश्य तं पशुं सारमेयमेव मन्यमानो भयाद्भूमौ प्रक्षिप्य स्वगृहमुद्दिश्य पलायितः। ततस्ते त्रयो मिलित्वा तं पशुमादाय प्रतस्थिरे।

---

(१) प्रतिपादयति प्रतिपन्नं करोति।

## ब्राह्मण-भुजङ्गमयोः



अस्ति कस्मिंश्चिदधिष्ठाने हरिदत्तो नाम ब्राह्मणः। तस्य च कृषिं कुर्वतः सदैव निष्फलः कालोऽतिवर्त्तते। अथैकस्मिन् दिवसे स ब्राह्मणो घर्म्मार्त्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तः। अनतिदूरे वल्मीकोपरि (१) प्रसारितभोगं भीषणं भुजङ्गमं दृष्ट्वासौ चिन्तयामास—नूनमेषा क्षेत्रदेवता कदाचिदपि न पूजिता तेनेदं मे कृषिकर्म्म विफलीभवति। तदहमस्याः पूजामद्य करिष्यामि। इत्यवधार्य्य कुतोऽपि क्षीरं याचित्वा शरावे निक्षिप्य वल्मीकान्तिकमुपगम्य उवाच—भोः क्षेत्रपाल मयैतावन्तं कालं न ज्ञातं यत् त्वमत्र वससि। तेन पूजा न कृता। तत् साम्प्रतं क्षमस्वेति। एवमुक्त्वा दुग्धं निवेद्य गृहाभिमुखं प्रायात्।

अथ प्रातर्यावदागत्य पश्यति तावत् दीनारमेकं (२) शरावे दृष्टवान्। एवञ्च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति एकैकञ्च दीनारं गृह्णाति।

---

(१) पुत्तिकाख्यैः कीटैः सञ्चितो गृहाकारो मृत्तिकाराशिर्वल्मीकः।

(२) दीनारं स्वर्णमुद्राम्।

अथैकस्मिन् दिवसे वल्मीके क्षीरनयनाय पुत्त्रं नियुज्य



ब्राह्मणभुजङ्गयोः ।

ब्राह्मणो ग्रामं जगाम। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः। दिनान्तरे तत्र गत्वा स दीनारमेकं दृष्ट्वा गृहीत्वा च चिन्तितवान्—नूनं सौवर्णदीनारपूर्णोऽयं वल्मीकः। तदेनं भुजङ्गं हत्वा सर्व्वमेकवारं गृहीष्यामि। एवं सम्प्रधार्य्य अन्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुड़ेन शिरसि ताड़ितः। स च दैववशादमुक्तजीवितो रोषात् तं ब्राह्मणकुमारं तीव्रविषैर्दशनैस्तथा अदशत् यथा स सद्यः (१) पञ्चत्वमुपागतः।

अथ पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा तत्र गत्वा तारस्वरेण सर्पमस्तौत्। तदा सर्पो वल्मीकान्तर्लीन एव ब्राह्मणं प्रत्युवाच—त्वं लोभादत्रागतः पुत्रशोकमपि विहाय। इतः परं तव मम च प्रीतिर्नोचिता। तव पुत्रेण यौवनोन्मत्तेनाहं ताड़ितो मया च स दष्टः। कथं मया लगुड़प्रहारो विस्मर्त्तव्यः त्वया च पुत्रशोकदुःखं कथं विस्मर्त्तव्यम्। इत्युक्त्वा बहुमूल्यं हीरकमणिं तस्मै दत्त्वा पुनस्त्वया नागन्तव्यमिति कथयित्वा विवरं प्रविष्टः। ब्राह्मणोऽपि मणिं गृहीत्वा पुत्रबुद्धिं निन्दन् स्वगृहमागतः।

---

१) सद्यः तत्क्षणम्।

# पक्षिव्याधनृपामात्यानाम्



अस्ति कस्मिंश्चित् पर्वते महान् वृक्षः। तत्र च सिन्धुक-नामा कोऽपि पक्षी प्रतिवसति। तस्य पुरीषे सुवर्णमुत्पद्यते। अथ कदाचित् तमुद्दिश्य व्याधः कोऽपि समाययौ। स च पक्षी तदग्रत एव पुरीषमुत्ससर्ज। अथ पातसमकालमेव तत् सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयमगमत्। उवाच च—अहो मम शिशुकालादारभ्य शकुनिबन्धव्यसनिनो(१)ऽशीतिवर्षाणि समभूवन्। न च कदाचिदपि पक्षिपुरीषे सुवर्णं दृष्टम्। इति विचिन्त्य तत्र वृक्षे पाशं बबन्ध।

अथासावपि पक्षी मूर्खस्तत्रैव विश्वस्तचित्तो यथापूर्व-मुपविष्टः तत्कालमेव पाशेन बद्धः। व्याधस्तु तं पाशादुन्मुच्य पञ्जरके संस्थाप्य निजावासं नीतवान्। अथासौ चिन्तया-मास किमहमनेन अपायकारिणा पक्षिणा करिष्यामि। यदि कदाचित् कोऽपि अमुमीदृशं ज्ञात्वा राज्ञे निवेदयिष्यति तन्नूनं प्राणसंशयो मे भवेत्। अतः स्वयमेव पक्षिणं राज्ञे निवेदयामि। इति विचार्य तथैवानुष्ठितवान्।

---

(१) शकुनिबन्धव्यसनिनः पक्षिबन्धनरूपव्यसनासक्तस्य। व्यसनं पापं वृथा-चेष्टा वा।

अथ राजापि तं पक्षिणं दृष्ट्वा, श्रुत्वा च सर्वं वृत्तान्तं



पक्षिव्याधनृपामात्यानाम्।

परां (१) तुष्टिमुपागतः। प्राह चैवं—हंहो रक्षापुरुषा एनं पक्षिणं यत्नेन रक्षत, अशनपानादिकञ्चास्य यथेच्छं प्रयच्छत। अथ मन्त्रिणा अभिहितं—राजन् किमनेन विहङ्गमेन। अश्रद्धेये व्याधवचने प्रत्ययं मा कार्षीः। किं कदाचित् पक्षिपुरीषे सुवर्णं सम्भवति। तन्मुच्यतां पञ्जरबन्धनादयं पक्षी। इति मन्त्रिवचनात् राज्ञा मोचितोऽसौ पक्षी उन्नततोरणे (२) समुपविश्य सुवर्णमयीं विष्ठां विधाय श्लोकमिमं पठित्वा यथासुखमाकाशमार्गेण प्रायात्।

पूर्व्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः।
ततो राजा च मन्त्री च सर्वं वै मूर्खमण्डलम् ॥

---

(१) परां महतीम्।
(२) उन्नततोरणे उच्चवहिर्द्वारस्योपरि।

## सिंह-शृगालयोः

कस्मिंश्चित् वनप्रदेशे खरनखरो नाम सिंह प्रतिवसति स्म। स कदाचिदितश्चेतश्च परिभ्रमन् क्षुत्क्षामकण्ठो (१) न किञ्चिदपि सत्त्वमाससाद। ततश्चास्तमनसमये महतीं गिरिगुहामासाद्य तत्र प्रविष्टश्चिन्तयामास—नूनमेतस्यां गुहायां रात्रौ केनापि सत्त्वे नागन्तव्यम्। तन्निभृतो (२) भूत्वा तिष्ठामि। एतस्मिन्नन्तरे गुहास्वामी दधिपुच्छो नाम शृगालः समायातः। स चापश्यत् सिंहपदपंक्तिर्गुहायां प्रविष्टा न च निष्क्रमणं गता (३)। ततश्चाचिन्तयत्—अहो विनष्टोऽस्मि, नूनमस्या अन्तर्गतेन सिंहेन भाव्यम्। तत् किं करोमि कथं ज्ञास्यामि।

एवं विचिन्त्य दधिपुच्छो द्वारस्थः फुत्कर्त्तु-(४)मारेभे। हंहो विल हंहो विल इत्युक्त्वा तूष्णीम्भूय भूयोऽभाषत—भोः किं न स्मरसि यन्मया त्वया सह समयः कृतोऽस्ति मया वाह्यात् समागतेन त्वं वक्तव्यः त्वया चाहमाकारणीय (५) इति। तद्यदि मां नाह्वयसि ततोऽहं द्वितीयं विलं यास्यामि।

---

(१) क्षुत्क्षामकण्ठः क्षुधा क्षुधया क्षामः क्षीणः कण्ठोऽस्य।

(२) निभृतः अन्यैरलक्षितः।

(३) निष्क्रमणं गता वहिर्गता।

(४) फुत्कर्त्तुम् आह्वातुम्।

(५) आकारणीयः आह्वातव्यः।

तच्छ्रुत्वा सिंहश्चिन्तितवान्—नूनमेषा गुहा अस्य समागतस्य सदा समाह्वानं करोति। परमद्य मद्भयान्न किञ्चित् ब्रूते। तदहमस्याह्वानं करोमि येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां याति। एवं सम्प्रधार्य्य (१) सिंहस्तस्य आह्वानमकरोत्। अथ सिंहशब्देन सा गुहा प्रतिरवपूर्णा अन्यानपि दूरस्थानारण्यजीवान् त्रासयामास। शृगालोऽपि पलायमान इमं श्लोकमपठत्।

अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता (२)॥

---

(१) सम्प्रधार्य्य स्थिरीकृत्य।

(२) यः पुरुषः अनागतम् अनुपस्थितं सम्भावितमिति यावत् कुरुते सम्भावितस्यानिष्टस्य प्रतीकारं विदधाति, स शोभते निर्विघ्नेन कालमतिवाहयतीत्यर्थः। यः अनागतं न करोति सम्भावितस्यानिष्टस्य प्रतीकारं न विदधाति, स शोच्यते बन्धुभिरिति शेषः विपदि पतितो बन्धूनां शोककारणं भवतीत्यर्थः। अत्र अस्मिन् वने संस्थस्य स्थितस्य मम जरा आगता दीर्घं कालमस्मिन् वने वसामीति भावः। बिलस्य गह्वरस्य वाणी महाह्वानरूपा मे मया कदापि न श्रुता। मे इति मयेत्यर्थकमव्ययम्।

# मन्दविष-जलपादयोः



अस्ति वरुणाद्रिसमीपे एकस्मिन् प्रदेशे परिणतवया (१) मन्दविषो नाम कृष्णसर्पः। स एवं चित्ते सञ्चिन्तितवान्—कथं नाम मया सुखोपायेन वर्त्तितव्यमिति। ततो बहुमण्डूकं ह्रदमुपगम्य धृतिपरीतमिव (२) आत्मानं दर्शितवान्। अथ तथा स्थिते तस्मिन् उदकप्रान्तगतेनैकेन मण्डूकेनासौ पृष्टः—माम किमद्य यथापूर्व्वमाहारार्थं न विहरसि।

सोऽब्रवीत्—भद्र कुतो मे मन्दभाग्यस्य आहाराभिलाषः। अद्य प्रदोषे मया आहारार्थं विहरमाणेन दृष्ट एको मण्डूकः। तद्ग्रहणार्थं मया क्रमः सज्जितः (३)। सोऽपि मां दृष्ट्वा मृत्युभयेन स्वाध्यायप्रसक्तानां (४) ब्राह्मणानाम् अन्तरमपक्रान्तो (५) न विभावितो (६) मया क्वापि गतः। तस्मादृश्य-

---

(१) परिणतवयाः परिणतं परिणामं प्राप्तं वयोऽस्य वयसा वृद्धः इत्यर्थः।

(२) धृतिपरीतमिव सन्तोषपूर्णमिव सर्व्वविषये स्पृहारहितमिवेत्यर्थः।

(३) क्रमः सज्जितः आक्रमणार्थमुद्यमः क्रमः सज्जित कृतः।

(४) स्वाध्यायप्रसक्तानां वेदाध्ययनरतानाम्।

(५) अपक्रान्तः गतः प्रविष्टः इति यावत्।

(६) विभावितः उद्भावितः लक्षित इति यावत्।

मोहितचित्तेन मया कस्यचित् ब्राह्मणस्य तनयोऽङ्गुष्ठे दष्टः। ततोऽसौ सपदि पञ्चत्वमुपागतः।

अथ तस्य पित्रा दुःखितेनाहं शप्तः यथा—दुरात्मन् त्वया निरपराधो मत्सुतो दष्टः तदनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि, तत्प्रसादलब्धया च जीविकया वर्त्तिष्यसे इति। अतोऽहं युष्माकं वहनार्थमागतोऽस्मि।

ततस्तेन सर्व्वमण्डूकानामिदमावेदितम्। तैश्च प्रहृष्ट-मनोभिः सर्व्वैरेव गत्वा जलपादनाम्नो दर्दुरराजस्य(१) विज्ञप्तम्। अथासावपि मन्त्रिपरिवृतः अत्यद्भुतमिदमिति मन्यमानः ससम्भ्रमं ह्रदादुत्तीर्य्य मन्दविषस्य फणिनः फणाप्रदेशमधिरूढ़ः। शेषा अपि यथाज्येष्ठं तत्पृष्ठोपरि समारुरुहुः। किं बहुना, बहवस्तदुपरि स्थानमप्राप्तवन्तस्तस्यानुपदं (२) धावन्ति स्म। अथ जलपादस्तदङ्गसंस्पर्शसुखं लभमानः प्राह—

न तथा करिणा यानं तुरगेण रथेन वा।
नरयानेन वा यानं यथा मन्दविषेण मे॥

मन्दविषोऽपि तेषां तुष्ट्यर्थम् अनेकप्रकारगतिविशेषा-नदर्शयत्।

अथ अन्येद्युर्मन्दविषः छद्मना मन्दं मन्दं विसर्पति। तच्च

(१) दर्दुरराजस्य भेकराजस्य।

(२) अनुपदं पश्चात्।

दृष्ट्वा जलपादोऽब्रवीत्—भद्र मन्दविष यथापूर्व्वं कथमद्य साधु



मन्दविषजलपादयोः ।

नोह्यते। मन्दविषोऽब्रवीत्—देव अद्य आहारवैकल्यात् (१) न मे वोढुं शक्तिरस्ति। अथासावब्रवीत्—भद्र भक्षय क्षुद्रमण्डूकान्। तच्छ्रुत्वा प्रहर्षितसर्व्वगात्रो मन्दविषः ससम्भ्रममब्रवीत्—ममायमेव विप्रशापोऽस्ति। तव अनेनानुज्ञावचनेन प्रीणितोऽस्मि। ततोऽसौ नैरन्तर्य्येण (२) मण्डूकान् भक्षयन् कतिपयैरेव अहोभिर्बलवान् संवृत्तः। जलपादोऽपि मन्दविषेण कृतकवचनव्यामोहितः (३) किमपि नावबुध्यते।

अत्रान्तरे अन्यो महाकायः कृष्णसर्पस्तमुद्देशं (४) समायातः। स च मन्दविषं मण्डूकैर्वाह्यमानं (५) दृष्ट्वा विस्मयमगमत्। आह च—वयस्य येऽस्माकमशनं तैर्वाह्यसे। विरुद्धमेतत्। अथ मन्दविषोऽन्तर्गूढ़मवहस्य तस्मै स्वाभिप्रायं निवेदयामास। जलपादस्तच्छ्रुत्वा नितरां व्यग्रहृदयस्तमपृच्छत्—भद्र किं त्वया अभिहितमिदं विरुद्धं वचः।

अथासौ आकारप्रच्छादनार्थं (६) न किञ्चिदित्यब्रवीत्। एवं कृतकवचनव्यामोहितो जलपादस्तस्य दुष्टाभिसन्धिं नावबुध्यते। किं बहुना तथा तेन सर्व्वेऽपि भक्षिता यथा वीजमात्रमपि नावशिष्टम्।

---

(१) आहारवैकल्यात् आहारभङ्गात् आहारविरहादिति यावत्।
(२) नैरन्तर्य्येण अविच्छेदेन।
(३) कृतकवचनव्यामोहितः कृतकवचनैः कपटवाक्यैः व्यामोहितः मोहमापादितः।
(४) उद्देशं प्रदेशम्।
(५) मण्डूकैः भेकैः वाह्यमानं वहनक्रियां कार्य्यमाणम्।
(६) आकारप्रच्छादनार्थं भावगोपनार्थम्।

# मण्डूक-कृष्णसर्पयोः



अस्ति कस्मिंश्चित् कूपे गङ्गदत्तो नाम मण्डूकराजः। स कदाचित् दायादैरुद्वेजितो अरघट्टमाश्रित्य (१) कूपात् क्रमेण निष्क्रान्तः। अथ तेन चिन्तितं—कथं तेषां दायादानां मयापकारः कर्त्तव्य इति। एवं बहु चिन्तयन् स विले प्रविशन्तं प्रियदर्शनाभिधं कृष्णसर्पमपश्यत्। तं दृष्ट्वा भूयोऽचिन्तयत्—एनं कृष्णसर्पं कूपे नीत्वा सकलदायादानामुच्छेदं करिष्यामि।

एवं स विभाव्य (२) विलद्वारं गत्वा तमाहूतवान्—एह्येहि प्रियदर्शन एहीति। तच्छ्रुत्वा सर्पश्चिन्तयामास—य एष मामाह्वयति स सजातीयो न भवति। यतो नैषा सर्पवाणी। अन्येन केनापि सह मर्त्यलोके मम सन्धानं (३) नास्ति। तदत्रैव दुर्गे स्थितत्वात् वेद्मि कोऽयं भविष्यति। उक्तञ्च—

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः (४)।
न तेन सङ्गतिं (५) कुर्य्यादित्युवाच बृहस्पतिः॥

---

(१) अरघट्टमाश्रित्य अरघट्टं जलोद्धरणयन्त्रम् आश्रित्य अवलम्ब्य।

(२) विभाव्य चिन्तयित्वा स्थिरीकृत्येति यावत्।

(३) सन्धानं मिलनं मैत्रीति यावत्।

(४) संश्रयः आवासस्थलम्।

(५) सङ्गतिं मैत्रीम्।

कदाचित् कोऽपि मन्त्रवाद्यौषधचतुरो मामाहूय बन्धने (१) क्षिपति। अथवा कश्चित् पुरुषो वैरमाश्रित्य कस्यचित् विपक्षस्यार्थे मामाह्वयतीति। प्राह च—भोः को भवान्। स आह अहं गङ्गदत्तो नाम मण्डूकाधिपतिः त्वत्सकाशे मैत्र्यर्थमभ्यागतः।

तच्छ्रुत्वा सर्प आह—भो अश्रद्धेयमेतत्। तृणानां वह्निना सह मैत्रीसंगमः (२) क्व। गङ्गदत्त आह—भोः सत्यमेतत् स्वभाववैरी त्वमस्माकम्। परं परिभवादहं (३) त्वत्सकाशं प्राप्तः। सर्प आह—कथय कस्मात् ते परिभवः। स आह दायादेभ्यः। सर्पोऽब्रवीत् क्व ते आश्रयः वाप्यां (४) कूपे तड़ागे ह्रदे वा। तेनोक्तं—पाषाणनिबद्धे कूपे। सर्प आह—अपदा (५) वयम्। तन्नास्ति तत्र मे प्रवेशः, प्रविष्टस्य स्थानं नास्ति यत्र स्थितस्तव दायादान् व्यापादयामि।

गङ्गदत्त आह—भोः समागच्छत्वम्, अहं सुखोपायेन तत्र

---

(१) बन्धने पाशे।

(२) मैत्रीसङ्गमः मित्रभावेन मेलनम्।

(३) परिभवः अवमानना।

(४) वापी दीर्घिका तस्याम्।

(५) अपदाः पादरहिताः।

तव प्रवेशं कारयिष्यामि। तथा तस्य मध्ये जलोपान्ते रमणीयं



मण्डूककृष्णसर्पयोः।

कोटरमस्ति। यत्र स्थितस्त्वं लीलया तान् दायादान् व्यापादयिष्यसि। तच्छ्रुत्वा सर्पोऽचिन्तयत्—अहं तावत् परिणतवयाः। कदाचित् कथञ्चिन्मूषिकमेकं प्राप्नोमि न वा। सुखावहो (१) जीवनोपायोऽयमनेन कुलाङ्गारेण मे दर्शितः। तद्गत्वा तान् मण्डूकान् भक्षयामीति।

एवं विचिन्त्य स तमाह—भो गङ्गदत्त यद्येवं तदग्रे भव येन तत्र गच्छावः। गङ्गदत्त आह—भोः प्रियदर्शन अहं त्वां सुखेन तत्र नेष्यामि। स्थानञ्च दर्शयिष्यामि। परं त्वया मत्परिजनो रक्षणीयः। केवलं यानहं तव दर्शयिष्यामि त एव भक्षणीयाः। सर्प आह—भद्र साम्प्रतं त्वं मे मित्रं जातं तन्न भेतव्यम्। त्वद्वचनेन भक्षणीयास्ते दायादाः। एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्ग्य च तेन सह प्रस्थितः।

अथ कूपमासाद्य अरघट्टमार्गेण सर्पस्तेन स्वालयं नीतः। ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरं नीत्वा दर्शितास्ते दायादाः। ते च सर्वे तेन शनैः शनैर्भक्षिताः। अथ मण्डूकाभावे सर्पेणाभिहितं—भद्र निःशेषितास्ते रिपवः। तत् प्रयच्छ मे अन्यत् किञ्चिद्भोजनम्। यतोऽहं त्वया अत्रानीतः। गङ्गदत्त आह—कृतं त्वया मित्रकृत्यम् तत् साम्प्रतमनेनैवारघट्टमार्गेण गम्यताम्।

---

(१) सुखावहः सुखजनकः अनायाससाध्यो वा।

सर्प आह—भो गङ्गदत्त न सम्यगभिहितं भवता । कथमहं तत्र गच्छामि । मदीयं बिलदुर्गमन्येन रुद्धं भविष्यति । तस्मादत्र स्थितस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ । नो चेत् सर्वानेव भक्षयिष्यामि । तच्छ्रुत्वा गङ्गदत्तो व्याकुलितमना अचिन्तयत्—अहो किमेतन्मया कृतमेनं समानीय । यदि निवारयिष्यामि तत् सर्वानेव भक्षयिष्यति । एवं निश्चित्य तस्यैकैकं मण्डूकं नित्यमेवादिशत् । सोऽपि तं भक्षयित्वा अन्यमपि तस्य परोक्षे भक्षयति ।

अथान्यस्मिन् दिने तेनापरान् मण्डूकान् भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तनामा मण्डूको भक्षितः । तं भक्षितं ज्ञात्वा गङ्गदत्तो बहु विललाप । ततोऽसौ स्वपत्न्या अभिहितः ।

किं क्रन्दसि दुराक्रन्द (१) स्वपक्षक्षयकारक ।
स्वपक्षस्य क्षये जाते को नस्त्राता भविष्यति ॥

अथ तच्छ्रुति काले तेन सकलमेव कवलितं (१) मण्डूककुलं, केवलमेको गङ्गदत्तस्तिष्ठति । ततः प्रियदर्शनेन भणितं—भद्र गङ्गदत्त बुभुक्षितोऽहम् । निःशेषिताः सर्वे मण्डूकाः । तद्दीयतां मे किञ्चिद्भोजनम् । स आह—भो मित्र न त्वया अत्र

---

(१) दुराक्रन्द निष्फलविलाप अधुना तव विलापो विफल एवेति भावः ।

(२) कवलितं ग्रस्तं भक्षितमिति यावत् ।

विषये मयि विद्यमाने क्वापि चिन्ता कार्य्या। यदि मां प्रेषयसि तदा अन्यकूपस्थान् मण्डूकान् विश्वास्य अत्रानयामि। स आह— मम तावत् त्वमभक्ष्यो भ्रातृस्थानीयः (१)। यद्येवं करोषि तर्हि साम्प्रतं पितृस्थाने भवसि। तदेवं क्रियताम्। स तु तदाकर्ण्य अरघट्टमाश्रित्य कूपाद् विनिष्क्रान्तः। प्रियदर्शनोऽपि तदागमनाकाङ्क्षया तत्र प्रतीक्षमाणस्तस्थौ।

अथ चिरादप्यनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरवासिनीं गोधामुवाच— भद्रे क्रियतां मे स्तोकं (२) साहाय्यम्। चिरपरिचितस्ते गङ्गदत्तः। तत् कुत्रचिज्जलाशये अन्विष्य गत्वा तत्सकाशं मम सन्देशं कथय—यदागम्यतां द्रुतमेकाकिनैव भवता यद्यन्ये मण्डूका नागच्छन्ति। नाहं त्वया विना अत्र वस्तुं शक्नोमि। किञ्च अहं यदि त्वां प्रति विरुद्धमाचरामि तदा मदीयं जन्मसुकृतं तवेति (३)।

गोधा तु तद्वचनात् द्रुतं गङ्गदत्तमन्विष्याह—भद्र गङ्गदत्त स तव सुहृत् प्रियदर्शनस्तव पन्थानमीक्षमाणस्तिष्ठति तत्

(१) भ्रातृस्थानीयः भ्रातृस्थाने स्थितः भ्रातृसदृश इति यावत्।

(२) स्तोकम् अल्पम्।

(३) अस्मिन् जन्मनि यन्मया सुकृतं कृतं तत् तवास्तु।

शीघ्रमागम्यताम् । उक्तञ्च तेन यदि त्वां प्रति विरुद्धमाचरामि तदा मदीयं जन्मसुकृतं तवेति । तन्निःशङ्केन मनसा समागम्यताम् । तदाकर्ण्य गङ्गदत्तः प्राह ।

बुभुक्षितः (१) किं न करोति पापं
क्षीणा (२) जना निष्करुणा भवन्ति ॥
आख्याहि भद्रे प्रियदर्शनस्य (३)
न गङ्गदत्तः पुनरेति कूपम् ॥

---

(१) बुभुक्षितः बुभुक्षया पीड़ितः क्षुधार्त्त इति यावत् ।

(२) क्षीणाः दुर्बलाः ।

(३) प्रियदर्शनस्य प्रियदर्शनम । सम्बन्धविवक्षया षष्ठी ।

# सिंह-शृगाल-रासभानाम्



कस्मिंश्चिद्वनोद्देशे करालकेशरो नाम सिंह प्रतिवसति। तस्य च धूसरको नाम शृगालः परिचारकोऽस्ति। कदाचित् तस्य सिंहस्य हस्तिना सह युध्यमानस्य शरीरेऽतिगुरवः प्रहाराः सञ्जाताः। तैरसौ पदमेकमपि चलितुं न शक्नोति। तस्याचलनाच्च धूसरकः क्षुत्क्षामकण्ठो दौर्ब्बल्यं गतः। अन्यस्मिन्नहनि स सिंहमवोचत्—स्वामिन् बुभुक्षया पीड़ितोऽहं पदमपि चलितुं न शक्नोमि। तत् कथं ते शुश्रूषां करोमि।

सिंह आह—भो गच्छ अन्विष्यतां किञ्चित् सत्त्वम् येनाहमिमामवस्थां गतोऽपि व्यापादयामि। तदाकर्ण्य शृगालोऽन्वेषणं कुर्व्वन् कञ्चित् समीपवर्त्तिनं ग्राममासादितवान्। तत्र च लम्बकर्णो नाम गर्द्दभस्तड़ागोपान्ते प्रविरलदूर्वाङ्कुरान् कृच्छ्रादास्वादयन् दृष्टः। ततश्च समीपवर्त्तिना भूत्वा तेनाभिहितं—माम नमस्कारोऽयं मदीयः सम्भाव्यताम् (१) चिरात् दृष्टोऽसि। तत् कथय किमेवं दुर्ब्बलतां गतः।

---

(१) सम्भाव्यतां परिगृह्यताम्।

लम्बकर्ण आह—भो भागिनेय किं कथयामि। रजकोऽतिनिर्दयो मामतिभारेण पीडयति। घासमुष्टिमपि न प्रयच्छति। केवलमत्र दूर्वाङ्कुरान् धूलिमिश्रितान् भक्षयामि। तत् कुतो मे शरीरपुष्टिः। शृगाल आह—माम यद्येवं तदस्ति मरकत-सदृश-शस्यपूर्णो नदीसनाथो (१) रमणीयः प्रदेशः। तत्रागत्य मया सह सुखमनुभवंस्तिष्ठ। लम्बकर्ण आह—भो भगिनीसुत युक्तमुक्तं भवता। परं वयं ग्राम्याः पशवः अरण्यचराणां वध्याः। तत् किं तेन भव्यप्रदेशेन। शृगाल आह—माम मैवं वद मद्भुजपञ्जररक्षितः (२) प्रदेशोऽसौ। नास्ति कस्यचिदपरस्य तत्र प्रवेशः।

अथ लम्बकर्णः शृगालेन सह सिंहान्तिकमागतः। सिंहोऽपि व्याकुलस्तं गर्द्दभं दृष्ट्वा यावत् समुत्तिष्ठति तावद्रासभः पलायितुमारब्धवान्। अथ तस्य पलायमानस्य सिंहेन तलप्रहारो (३) दत्तः। स च मन्दभाग्यस्य व्यवसाय इव (४) व्यर्थतां गतः।

अथ शृगालः कोपाविष्टस्तमुवाच—भोः किमेवंविधः प्रहारस्ते। यदि गर्द्दभोऽपि तव पुरतो बलाद्गच्छति तत् कथं

(१) नदीसनाथः नदीसहायः यस्य सन्निधौ नदी विद्यते इत्यर्थः।

(२) पञ्जरः पिञ्जरः।

(३) तलप्रहारः करतलप्रहारः नखरप्राहर इति यावत्।

(४) व्यवसाय उद्योगः।

गजेन सह युद्धं करिष्यसि। दृष्टं ते बलम्। अथ सलज्जं सिंह आह—भोः किमहं करोमि। मया न क्रमः सज्जीकृत आसीत्। अन्यथा गजोऽपि मत्क्रमाक्रान्तो न गच्छति। शृगाल आह—अद्यैव पुनस्तवान्तिकं तमानेष्यामि। त्वया सज्जीकृतक्रमेण स्थातव्यम्।

सिंह आह—भद्र यो मां प्रत्यक्षं दृष्ट्वा गतः स पुनः कथमत्रागमिष्यति। तदन्यत् किमपि सत्त्वम् अन्विष्यताम्। शृगाल आह—किं तवानेन व्यापारेण, त्वं केवलं सज्जितक्रमस्तिष्ठ। अथ धूर्त्तवचनप्रतारितो रासभः पुनरपि सिंहान्तिकमागतः। ततः प्राक्सज्जितक्रमेण सिंहेन लम्बकर्णो व्यापादितः। ततश्च स शृगालं रक्षकं निरूप्य स्वयं स्नानार्थं नद्यां गतः। अथ शृगालेनातिलौल्यात् (१) खरस्य कर्णसहितं हृदयं भक्षितम्।

अथ यावत् सिंहः स्नात्वा प्रत्यागतः तावत् कर्णहृदयरहितो रासभस्तिष्ठति। तं दृष्ट्वा कोपपरीतः (२) सिंहः शृगालमाह—पाप किमिदमनुचितं कर्म समाचरितं यत् कर्णहृदयभक्षणे-

(१) अतिलौल्यात् अतिचपलत्वात् अतिलोभादिति यावत्।

(२) कोपपरीतः क्रोधाभिभूतः।

नायमुच्छिष्टतां नीतः। शृगालः सविनयमाह – स्वामिन् मा मैवं वद। कर्णहृदयरहितोऽयं रासभ आसीत्। तेन इहागत्य त्वामवलोक्य भयाद्गत्वा भूयोऽप्यागतः। अथ तद्वचनं श्रद्धेयं मत्वा सिंहस्तेन सह तं संविभज्य भक्षितवान्।

---

## सिंही-शृगालशावयोः

कस्मिंश्चिद्वनोद्देशे सिंहदम्पती निवसतः स्म। अथ कदाचित् सिंही पुत्रद्वयमजीजनत्। सिंहो नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति। एकस्मिन्नहनि तेन किमपि नासादितम्। वने भ्रमत एव तस्य रविरस्तं गतः। अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः। तमसौ बालकमवलोक्य यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्यै जीवन्तमेव समर्पितवान्।

ततः सिंह्या अभिहितं—भोः कान्त आनीतं त्वया किञ्चिद-स्माकं भोजनम्। सिंह आह – प्रिये मया अद्यैनं शृगालशिशुं परित्यज्य (१) न किञ्चित् सत्त्वमासादितम्। एष च बालोऽय-मिति कृत्वा न मया व्यापादितः। इदानीं त्वमिनं भक्षयित्वा पथ्यं कुरु। प्रभाते पुनरन्यत् किञ्चिदाहरिष्यामि। सा प्राह—

(१) शृगालशिशुं परित्यज्य शृगालशिशुं विना।

भोः कान्त त्वया बालोऽयमिति विचिन्त्य न हतः। कथमेनमहं स्वोदरार्थे विनाशयामि। तस्मान्ममायं तृतीयः पुत्रो भवतु। एवमुक्त्वा सिंही तमपि स्तनक्षीरेण पुष्टिमनयत्। एवं ते त्रयः शिशवः परस्परमज्ञातजातिविशेषा एकाहारविहारा (१) बाल्य-समय-मतिवाहयन्ति स्म।

अथ कदाचित् तत्र वने भ्रमन्नारण्यगजः समायातः। तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपितौ तं प्रति प्रचलितौ। तदवलोक्य शृगालसुतेनाभिहितं—हंहो गजोऽयं युष्मत्कुलशत्रुः तन्न गन्तव्य-मेतस्याभिमुखम्। एवमुक्त्वा स गृहं प्रधावितः। तावपि ज्येष्ठबान्धवभङ्गात् (२) निरुत्साहतां गतौ। अथ तौ गृहं प्राप्य पित्रोरग्रतः ज्येष्ठभ्रातृचेष्टितमूचतुः यथा गजं दृष्ट्वा दूरत एव नष्ट इति। स तु तदाकर्ण्य कोपाविष्टः प्रस्फुरिताधर-स्ताम्रलोचनो (३) भ्रुकुटिं कृत्वा तौ निर्भर्त्सयन् परुष-वचनान्युवाच।

ततः सिंह्या एकान्ते नीत्वा प्रबोधितोऽसौ - वत्स मैवं कदाचिज्जल्प। भवतो लघुभ्रातरावेतौ (४)। असौ तु

(१) एकः एकविधः आहारः विहारश्च येषां ते एकविधमाहारं विहारं च कुर्व्वाणा इत्यर्थः।

(२) ज्येष्ठबान्धवभङ्गात् ज्येष्ठभ्रातृपलायनात्।

(३) प्रस्फुरिताधरः कम्पिताधरः। ताम्रलोचनः रक्तनयनः।

(४) लघुभ्रातरौ कनिष्ठभ्रातरौ।

प्रभूतकोपाविष्टस्तामुवाच— किमहमेताभ्यां शौर्य्येण रूपेण कौशलेन वा हीनः येन मामुपहसतः। तन्मया अवश्यमेतौ



व्यापादनीयौ । तदाकर्ण्य सिंही तस्य जीवितमिच्छन्ती अन्तर्विहस्य प्राह ।

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक ।
यस्मिन् कुले त्वमुत्पन्नः सिंहस्तत्र न हन्यते ॥

शृणु वत्स त्वं शृगालीसुतः कृपया मया स्वस्तनक्षीरेण पुष्टिं नीतः । यावदेतौ मत्पुत्रौ त्वां शृगालं न जानीतः तावत् द्रुतं गत्वा स्वजातीयानां मध्ये भव । नो चेत् आभ्यां हतो मृत्युपथं समेष्यसि । सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः शनैःशनैरपसृत्य स्वजात्या मिलितः ।

---

## सिंह-शृगालादीनाम्

अस्ति कस्मिंश्चिद्वने महाचतुरको नाम शृगालः । तेन कदाचिदरण्ये मृतो गजः समासादितः । स तु तस्य समन्तात् परिभ्रमति परं कठिनां त्वचं भेत्तुं न शक्नोति । अत्रावसरे इतस्ततश्च विचरन् कश्चित् सिंहस्तत्रैव प्रदेशे समाययौ ।

सिंहं समागतं दृष्ट्वा शृगालः संयोजितकरयुगलः सविनयमुवाच—स्वामिन् त्वदीयोऽहं लागुड़िकः (१) तवार्थे गजमिमं रक्षामि। तदेनं भक्षयतु स्वामी। तं प्रणतं दृष्ट्वा सिंहः प्राह—भो नाहमन्येन हतं सत्त्वं कदाचिदपि भक्षयामि। तत् तवैव गजोऽयं मया प्रसादीकृतः। तच्छ्रुत्वा शृगालः सानन्दमाह--युक्तमिदं स्वामिनो निजभृत्येषु।

सिंहे गते कश्चित् व्याघ्रः समाययौ। तमपि दृष्ट्वाऽसौ व्यचिन्तयत्—अहो एकस्तावत् दुरात्मा प्रणिपातेनापवाहितः (२)। कथमिदानीमेनमपि अपवाहयिष्यामि। नूनं शूरोऽयं न खलु भेदं (३) विना साध्यो (४) भविष्यति।

एवं सम्प्रधार्य्य तस्याभिमुखो भूत्वा शृगाल उन्नतकन्धरः ससम्भ्रममुवाच (५)—माम कथमत्र भवान् मृत्युमुखे प्रविष्टः। गजः सिंहेन व्यापादितः स च मामेनद्रक्षणे नियुज्य नद्यां स्नानार्थं गतः। तेन गच्छता मम समादिष्टं यदि कश्चिदिह

(१) लागुड़िकः लगुड़वाही पदातिरिति यावत्।

(२) अपवाहितः अपसारितः दूरीकृत इति यावत्।

(३) भेदं विरोधघटनाम्।

(४) साध्यः साधयितुं वशीकर्त्तुं शक्यः।

(५) ससम्भ्रमं सभयं सोद्वेगं वा।

व्याघ्रः समायाति त्वया सुगुप्तं ममावेदनीयम्। अद्य वनमिदं मया निर्व्याघ्रं कर्त्तव्यम्। पूर्वं व्याघ्रेणैकेन मया व्यापादितो गजो भक्षयित्वोच्छिष्टतां नीतः तद्दिनादारभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि।

तच्छ्रुत्वा व्याघ्रः सन्त्रस्तस्तमाह—भो भागिनेय देहि मे प्राणदक्षिणाम् (१)। त्वया तस्य चिरायातस्यापि (२) मदीया वार्त्ता नाख्येया। एवमभिधाय सत्वरमसौ पलायाञ्चक्रे।

गते व्याघ्रे तत्र कश्चित् द्वीपी समायातः। तमपि दृष्ट्वासौ व्यचिन्तयत्—दृढ़दंष्ट्रोऽयं चित्रकः। तदस्य पार्श्वादेतस्य गजस्य यथा चर्म्मच्छेदो भवति तथा करोमि। एवं निश्चित्य तमुवाच—भो भगिनीसुत किमिति चिराद्दृष्टोऽसि कथञ्च बुभुक्षित इव लक्ष्यसे तदतिथिरसि मे एष गजः सिंहेन हतस्तिष्ठति। अहं चास्य तदादिष्टो (३) रक्षकः। यावत् सिंहो न समायाति तावदस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुतं व्रज।

---

(१) प्राणदक्षिणां प्राणदानम्।

(२) चिरायातस्य विलम्बेनागतस्य।

(३) तदादिष्टः तेन सिंहेन आदिष्टः आज्ञप्तः नियुक्त इति यावत्।

स आह—मम यद्येवं न कार्य्यं मे मांसाशनेन। सर्वथा तदेव भुज्यते यत् परिणमति (१)। तदहमितोऽपयास्यामि। शृगाल आह—भो अधीर विस्रब्धो (२) भूत्वा भक्षय त्वम्। तस्यागमनं दूरत एव तवाहं निवेदयिष्यामि। ततो द्वीपी मांसं भक्षयितुं गजस्य चर्म्म चिच्छेद। त्वचं भिन्नां विज्ञाय ससम्भ्रमं जम्बुकेनाभिहितं—भो भगिनीसुत गम्यताम्। एष सिंहः समायाति। तच्छ्रुत्वा चित्रको दूरं प्रणष्टः (३)।

ततोऽसौ चित्रककृतेन द्वारेण सुखेन हस्तिमांसं बुभुजे।

---

## चतुर्णां ब्राह्मणतनयानाम्।

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्त्रा निवसन्ति स्म। तेषां त्रयः सर्वशास्त्रपारगाः परं बुद्धिरहिताः। एकस्तु शास्त्रपराङ्मुखः केवलं बुद्धिमान्। अथ कदाचित् तैर्मिलित्वा मन्त्रितं को गुणो विद्यायाः यदि देशान्तरं गत्वा अर्थोपार्ज्जनं न

---

(१) परिणमति परिपाकं व्रजति।

(२) विस्रब्धः विश्वस्तः निःशङ्क इति यावत्।

(३) प्रणष्टः अदर्शनं गतः पलायित इति यावत्।

क्रियते। तत् सर्व्वे देशान्तरं गच्छामः। इति मन्त्रयित्वा ते गृहान्निर्जग्मुः।

अथ कञ्चिन्मार्गं गत्वा तेषां ज्येष्ठः प्राह—हंहो अस्माकमेकश्चतुर्थो मूढ़ः केवलं बुद्धिमान्। न च विद्यां विना केवलबुद्ध्या धनं लभ्यते। वयमस्मै स्वोपार्ज्जनविभागं न दास्यामः। तदेष निवृत्य गृहं गच्छतु। अथ द्वितीयेनाभिहितं—हंहो सुबुद्धे विद्याहीनस्त्वम्। तद्गच्छ गृहम्। ततस्तृतीयेनाभिहितं—हंहो न युज्यते कर्त्तुमेवम्। यतो वयं बाल्यात् प्रभृति एकत्र क्रीड़िताः। तदागच्छतु एषः अस्मदुपार्ज्जितस्य वित्तस्य संविभागी भवतु।

ततस्तैर्गच्छद्भिरटव्यां मृतसिंहास्थीनि दृष्टानि। अथ ते ऊचुः—हंहो पूर्व्वाधीतविद्यायाः प्रत्ययः (१) क्रियताम्। किञ्चिदेतन्मृतसत्त्वं तिष्ठति। अभ्यस्तविद्याप्रभावेणैतत् प्रत्युज्जीवयामः। ततश्च एकेनाभिहितम्—अहमस्थिसञ्चयं कर्तुं जानामि। द्वितीयेनाभिहितम्—अहं चर्म्ममांसरुधिरं प्रयच्छामि। तृतीयेनाभिहितम्—अहं सञ्जीवनं करोमि। तत एकेनास्थिसञ्चयः कृतः। द्वितीयेन चर्म्ममांसरुधिरैः संयोजित (२)। अथ तृतीयो यावत् जीवितं योजयितुं लग्नः (३) तावत् स

(१) प्रत्ययः परीक्षा।

(२) अस्थिसञ्चयः इति शेषः।

(३) लग्नः उद्युक्तः।

बुद्धिमता निषिद्धः उक्तश्च—एष सिंहः यद्येनं सजीवं करिष्यसि तत् सर्व्वानेवास्मानेष व्यापादयिष्यति।

ततस्तेनाभिहितं—धिङ्मूर्ख नाहं विद्यां विफलतां नेष्यामि। ततो बुद्धिमताभिहितं—तर्हि प्रतीक्षस्व यावदहमेतं समीपवर्त्तिनं तरुमारोहामि। तेन तथानुष्ठिते (२) यावत् सिंहः सजीवः कृतः तावत् त्रयोऽपि ते तेनोत्थाय व्यापादिताः। स च बुद्धिमान् सिंहे स्थानान्तरं गते वृक्षादवतीर्य्य गृहं गतः।

---

## पण्डितमूर्खाणाम्।

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणकुमाराः परस्परं मित्रत्वमापन्ना वसन्ति स्म। तेषां मतिरजायत—भो देशान्तरं गत्वा विद्याया उपार्ज्जनं क्रियताम्। अथान्यस्मिन् दिने विद्याया उपार्ज्जनार्थं ते कान्यकुब्जे गता। तत्र च विद्यामठं गत्वा पठन्ति। एवं द्वादशाब्दान् स्थित्वा सर्वे विद्याकुशलाः सञ्जाताः। ततश्चतुर्भिस्तैर्मिलित्वा उक्तं—वयं सर्वे विद्यापारं गताः। तदु-

(२) तेन बुद्धिमता तथा अनुष्ठिते समीपवर्त्तिनि तरौ आरूढे इत्यर्थः।

पाध्यायमनुज्ञाप्य (१) स्वदेशे गच्छाम: । अथैवं क्रियतामित्युक्त्वा ब्राह्मणा उपाध्यायादनुज्ञां लब्ध्वा पुस्तकानि गृहीत्वा प्रचलिता: ।

अथ ते यावत् कञ्चिन्मार्गं यान्ति तावत् द्वौ पन्थानौ समायातौ । तत उपविष्टा: सर्वे । तत्रैक: प्रोवाच—केन मार्गेण गच्छाम: । अथैकेन पुस्तकमुद्घाट्य उक्तम्—

महाजनो (२) येन गत: स पन्था: ।

अथ ते पण्डिता यावत् महाजनानुसृतेन (३) पथा यान्ति तावद्रासभ: कश्चित् श्मशाने तिष्ठति । तैरुक्तम्—एतत् किम् । अथ द्वितीय: पुस्तकमुद्घाट्य उवाच ।

श्मशाने च यस्तिष्ठति स बान्धव: ।

तदयमस्मदीयो बान्धव: । तत: कश्चित् तस्य ग्रीवायां लगति कोऽपि पादौ प्रक्षालयति ।

अथ यावत् दिशामवलोकनं ते पण्डिता: कुर्वन्ति तावत् कश्चिदुष्ट्रो दृष्ट: । तैरुक्तम्—एतत् किम् । अथ तृतीयेन पुस्तकमुद्घाट्य उक्तम्—

धर्मस्य त्वरिता गति: (४) ।

एष धर्मस्तावत् । चतुर्थेनोक्तम्—

(१) उपाध्यायमनुज्ञाप्य उपाध्यायादनुज्ञां लब्ध्वा ।

(२) महाजन: साधु: बणिक् च ।

(३) महाजनानुसृतेन वणिग्भिरवलम्बितेन ।

(४) धर्मस्य गति: पन्था: त्वरिता वेगवती अप्रतिहतेति यावत् । धर्ममार्गेण चलतां न विपदिति भाव: ।